Saryuprasad Sharma

Vasishthi havan paddhati wi tika

वासिष्ठी हवन पद्धति टीकासहित

Sanskrit

Printed on paper

1950

folio : 68

9.8"x5"

Complete




परिमार्जित— परिवर्धित— विशिष्ट सँस्करण—

# वासिष्ठी हवन पद्धतिः

## भाषा टीका सहिता प्रारम्भः

प्रकाशक—फर्म बाबू बैजनाथ प्रसाद बुकसेलर,
सन् १९५० राजादरवाजा बनारस सिटी। मूल्य १)




॥ अथ वासिष्ठीहवनपद्धतिः ॥

# यज्ञ-सूची

कर्मकाण्डप्रकर्तॄणां ग्रामीणानाम्पुरोधसाम् ।
हितायाऽत्र 'द्विजेन्द्रेण' यज्ञसूची वितन्यते ॥

कृत्वा नित्यक्रियां सम्यग्याजकः प्राङ्मुखो विशेत् । आहूय मण्डपे सर्वान्बन्धुविप्रपुरोधसः ॥ १ ॥
प्रतिज्ञाऽऽदौ प्रकर्तव्या स्वस्तिवाचनकं ततः । पुण्याहवाचनं कार्यमाचार्यादिवृतिं तथा ॥ २ ॥
रक्षाभिधानकञ्चैवं कलशस्थापनं ततः । गणेशाम्बिकयोःपूजा ग्रहस्थापनकं तथा ॥ ३ ॥
ब्रह्मादिसुरवृन्दानां सर्वतोभद्रमण्डले । स्थापनं पूजनं कार्यं यजमानैर्यथाविधि ॥ ४ ॥
षोडशप्रमुखानां च मातॄणां पूजनं तथा । चतुःषष्ठ्यर्चनं कार्यं कृत्वेन्द्रध्वजपूजनम् ॥ ५ ॥
समिद्विधानं कर्तव्यं कृत्वाऽत्र कुशकण्डिकाम् । ततोऽग्न्यावाहनं कृत्वा महाव्याहृतिपूर्वकः ॥ ६ ॥

होमश्च विधिवत्कार्यः पंचवारुणिकं ततः। नवग्रहादिदेवानां लोकपानामतः परम् ॥ ७ ॥

वा० कृत्वा दिक्पालहोमोऽत्र प्रधानस्य ततः परम्। सर्वतोभद्रदेवानां लोकपानामतः परम् ॥ ८ ॥ पृ०

२ यजमानैस्तु यज्ञेषु कर्त्तव्योऽत्र प्रयत्नतः। दिक्पालानां ग्रहाणां च दधिमाषबलिस्ततः ॥ ९ ॥

क्षेत्रपालबलिं कृत्वा स्विष्टकृद्धवनं ततः। पूर्णपात्रप्रदानञ्च कुर्याद्वै ब्रह्मणे तथा ॥ १० ॥

ब्रह्मग्रन्थिविमोकोऽत्र मार्जनञ्च ततः परम्। गोदानपूर्विका कार्या पूर्णाहुतिरनन्तरम् ॥ ११ ॥

बर्हिर्होमस्ततो भस्मत्र्यायुषार्तिके ततः। प्रदक्षिणा प्रकर्तव्या कृत्वा पुष्पांजलिं तथा ॥ १२ ॥

ब्राह्मणेभ्यो धनं देयमाचार्येभ्यो विशेषतः। गोहिरण्याऽन्नदानैश्च तोषणीया द्विजा नृपैः ॥ १३ ॥

अभिषेकस्ततः कार्य्यो विसर्जनमतः परम्। ब्राह्मणान्भोजयित्वा तु बन्धूंश्चापि भोजयेत् ॥ १४ ॥

वासिष्ठ–पद्धत्यनुसारिणी या विनिर्मितेयं शुभ यज्ञसूची।
सा सौख्यदा मोदकरा भूयात् पुरोधसां मण्डल–मण्डनीया ॥ १५ ॥ २



# ❋ अथ भाषाटीकोपेता वासिष्ठी-हवनपद्धतिः ❋





मंगलाचरणम् ।

तत्रादौ कृताह्निको यजमानः प्राङ्मुखमुपविश्य यज्ञमण्डपे कुशपुष्पाक्षतजलानि द्रव्यञ्चादाय संकल्पं
 कुर्यात् ॥ ॐ विष्णुर्विष्णुर्विष्णुः । ॐ नमः परमात्मने श्रीपुराणपुरुषोत्तमाय विष्णोराज्ञया प्रवर्तमानस्याद्य
श्रीब्रह्मणे द्वितीयपरार्द्धे श्रीश्वेतवाराहकल्पे वैवस्वतमन्वन्तरेऽष्टाविंशतितमे कलियुगे कलि प्रथमचरणे
जम्बूद्वीपे भारतवर्षे भरतखण्डे आर्यावर्तान्तर्गतब्रह्मावर्तैकदेशे ( महाश्मशाने आनन्दवनेऽविमुक्तवाराण-
सीक्षेत्रे गौरी मुखे त्रिकण्टकविराजते ( विक्रमशके बौद्धावतारे वर्तमान यथानामसंवत्सरे अमुकायने

श्रीगणेशं नमस्कृत्य सरयूशर्म्मणा मया । वासिष्ठ्याः पद्धतेरस्या भाषाटीका विरच्यते ॥

यजमान को चाहिये, कि यज्ञ के लिये एक शुभ मुहूर्त नियत करावे और जहाँ पर यज्ञ करना हो, वहाँ एक यज्ञशाला ( तृण या
कपड़े का या किसी और प्रकार का ) यथाशक्ति बनवावे । यज्ञ के दिन स्नानादि नित्य-क्रियाओं से निवृत्त होकर गोबर-आदि से 
लिपी हुई यज्ञशाला में आकर आचमन-प्राणायाम के बाद नीचे लिखे हुए संकल्प-मंत्र से प्रतिज्ञा करे संकल्प करते समय "विष्णुर्विणु"

वा० महामाङ्गल्यप्रदे मासानां मासोत्तमे मासे अमुकमासे अमुकपक्षे अमुकतिथौ अमुकवासरान्वितायामसुक- प०
दिनर्क्षे अमुकराशिस्थिते सूर्ये अमुकराशिस्थितेषु चन्द्रभौमबुधगुरुशुक्रशनिषु सत्सु शुभनामयोगे शुभकरणे
४ एवं गुणविशेषणविशिष्टायां शुभपुण्यतिथौ सकलशास्त्रश्रुतिस्मृतिपुराणोक्तफलप्राप्तिकामः अमुकगोत्रोत्पन्नः
अमुकशर्माहं ममात्मनः सपुत्रबान्धवस्य नवग्रहानुग्रहद्वारा ग्रहकृतराजकृतसर्वविधपीडानिवृत्तिपूर्वकनैरुज्य-
दीर्घायुः पुष्टिधनधान्यसमृद्ध्यर्थं नवग्रहमखेन ( अमुक यज्ञेन वा ) यक्ष्ये ॥ इति सङ्कल्पः ॥

## अथ स्वस्तिवाचनम् ।

ॐ स्वस्तिनऽइन्द्रो वृद्धश्रवाः स्वस्तिनः पूषा विश्व वेदाः । स्वस्तिन स्तार्क्ष्यो अरिष्टनेमिः स्वस्तिनो

से लेकर "नवग्रहमखेन यक्ष्ये" तक पढ़कर सङ्कल्प करे । अथवा जो यज्ञकार हो, उसका नाम लेकर सङ्कल्प करे । उसमें "महाश्मशाने" से लेकर "त्रिकण्टकविराजते" तक काशीक्षेत्र के अन्तर्गतही कहना चाहिये, अन्यत्र नहीं । "अमुक" के स्थान पर तिथि, वार, नक्षत्रादि का नाम कहना चाहिये । यदि यजमान ब्राह्मण हो तो "शर्मा" क्षत्रिय हो तो "वर्मा" वैश्य हो तो "गुप्त" और शूद्र हो तो "दास" शब्द को अपने नाम के साथ २ उच्चारण करना चाहिये । ४

यजमान अपने हाथ में गन्धमिश्रित अक्षत और पुष्प लेकर स्वस्तिवाचन करे, अथवा पुरोहित द्वारा करावे । अभाव में अन्य

वृहस्पतिर्दधातु ॥ १ ॥ पृषदश्वा मरुतः पृश्निमातरः शुभं यावानो व्विदथेषु जग्मयः । अग्निजिह्वा मनवः
प० सूरचक्षसो व्विश्वे नो देवाऽअवसागमन्निह ॥ २ ॥ भद्रं कर्णेभिः शृणुयाम देवाः भद्रं पश्येमाक्षभिर्यजत्राः । प०
स्थिरैरङ्गैस्तुष्टुवा ँ सस्तनूभिर्व्यशेमहि देवहितं यदायुः ॥ ३ ॥ शतमिन्नु शरदोऽअन्ति देवा यत्रा नश्चका
५ जरसन्तनूनाम् । पुत्रासो यत्र पितरो भवन्ति मानो मध्यारीरिषतायुर्गन्तोः ॥४॥ अदितिर्द्यौरदितिरन्तरिक्ष
ठ मदितिर्माता सपिता सपुत्रः विश्वेदेवा अदितिः पञ्चजनाऽअदितिर्जातमदितिर्जनित्वम् ॥ ५ ॥ दीर्घायु-
त्वाय बलाय वर्चसे सुप्रजात्वाय सहसा । अथो जीव शरदःशतम् ॥ ६ ॥ ॐ द्यौः शान्तिरन्तरिक्ष ँ
शान्तिः पृथिवी शान्तिरापः शान्तिरोषधयः शान्ति र्वनस्पतयःशान्तिर्विश्वेदेवाः शान्तिर्ब्रह्मशान्तिःसर्वं
ँ शान्तिः शान्तिरेव शान्तिः सामा शान्तिरेधि सुशान्तिर्भवतु ॥ ७ ॥ इति स्वस्तिवाचनम् ॥

## अथ पुण्याहवाचनम् ॥

तत्रादौ ब्राह्मणकरे जल दत्वा यजमानो ब्रूयात् । शिवा आपः सन्तु । ब्राह्मणवचनम् सौमनस्यमस्तु । ५

ब्राह्मणों द्वारा भी स्वस्त्ययन करावे ।

पुण्याहवाचन के पहिले ब्राह्मण के हाथ में जल देकर यजमान बोले—कल्याणकारी जल हो । ब्राह्मण बोलेः—कल्याण हो । इसी

एवम्–अक्षताः पान्तु । माङ्गल्यमस्तु । पुष्पाणि पान्तु । श्रीरस्तु । ताम्बूलानि पान्तु । ऐश्वर्यमस्तु दक्षिणाः
वा० पान्तु । आरोग्यमस्तु । दीर्घायुः शान्तिः पुष्टिस्तुष्टिः श्रीर्यशोविद्याविनयो बहुपुत्रं बहुधनं चास्तु । प०
यजमानः–यं कृत्वा सर्ववेदयज्ञक्रियारम्भाः शोभनाः प्रवर्तन्ते तमहमोङ्कारमादिं कृत्वा ऋग्यजुः सामाथर्वणा-
६ शीर्वचनं बहुऋषिमतं समनुज्ञातं भवद्भिरनुज्ञातः पुण्यं पुण्याहं वाचयिष्ये । वाच्यतामिति ब्राह्मणवचनम् ॥
पुनः यजमानो ब्रूयात् । व्रतनियमतपस्स्वाध्यायक्रतुदमदानविशिष्टानां सर्वेषां ब्राह्मणानां मनः समाधीयताम् ।
ब्राह्मणाः–समाहितमनसः स्मः । यजमानो ब्रूयात्–प्रसीदन्तु भवन्तः । ब्राह्मणाः–प्रसन्नाः स्मः । ततो
यजमानः–अवनिकृतजानुमण्डलः कमलमुकुलसदृशमञ्जलिं शिरस्याधाय दक्षिणेन पाणिना जलपूर्णं सुवर्ण

प्रकार उपरोक्त मंत्रों को पढ़कर ब्राह्मण के हाथ में अक्षत, पुष्प, ताम्बूल और दक्षिण आदि देवे । फिर ब्राह्मण लोग "मांगल्यमस्तु" आदि कहते हुए यजमान को आशीर्वाद देवें । यजमान बोलेः–जिसको करके सभी यज्ञ क्रिया कर्मआदि का आरम्भ करना शुभ होता है, उस वेदत्रयी के आशीर्वाद मंत्र को–जो ऋषिसम्मत है और जो आप लोगों (ब्राह्मणों) से मैंने जाना है–ऐसे पवित्र "पुण्याहवाचन" को मैं करूँगा । "करिष्ये"––ऐसा ब्राह्मण कहे । फिर यजमान बोलेः––व्रत, नियम, तप, अध्ययन, यज्ञ, संयम तथा दान–आदि ६
करने वाले सभी ब्राह्मणों का मन सावधान हो । ब्राह्मण बोलेः–हमलोग सावधान चित्तवाले हैं । यजमान बोलेः–आप लोग प्रसन्न होवें । ब्राह्मण बोलेंः––हम लोग प्रसन्न हैं । इसके बाद यजमान दोनों जानु को पृथ्वी पर करके तथा कमल की कली के समान अञ्जलि

कलशं धारयित्वा भूमौ स्थापिते पात्रद्वये (सति) प्रथमपात्रे किञ्चिदुदकं पातयेत्। तत्र ब्राह्मणा वदेयुः—ॐ शान्तिरस्तु। पुष्टिरस्तु। वृद्धिरस्तु। ऋद्धिरस्तु। अविघ्नमस्तु। आयुष्यमस्तु। आरोग्यमस्तु। शिवमस्तु। शिवं कर्मास्तु। कर्मसमृद्धिरस्तु। पुत्रसमृद्धिरस्तु। देवसमृद्धिरस्तु। शास्त्रसमृद्धिरस्तु। धनधान्यसमृद्धिरस्तु। इष्टसम्पदस्तु। अरिष्टनिरसनमस्तु। यच्छ्रेयस्तदस्तु॥ ततः द्वितीयपात्रे पातयेत्—यत्पापमशुभमकल्याणं तद्दूरे प्रतिहतमस्तु। पुनः प्रथमपात्रे पातयेत्—उत्तरोत्तर कर्मण्यविघ्नमस्तु। उत्तरोत्तरमहरहरभिवृद्धिरस्तु। उत्तरोत्तराः क्रियाः शुभाः शोभनाः सम्पद्यन्ताम्। तिथिकरणमुहूर्तनक्षत्रग्रहलग्नाधिदेवताः प्रीयन्ताम्। तिथिकरणे सुमुहूर्ते सुनक्षत्रे सुग्रहे सुदैवते प्रीयेताम्। अग्निपुरोगा विश्वेदेवाः प्रीयन्ताम्। इन्द्रपुरोगा मरुद्गणाः प्रीयन्ताम्। माहेश्वरीपुरोगा उमामातरः प्रीयन्ताम्। वसिष्ठपुरोगा ऋषिगणाः प्रीयन्ताम्। अरुन्धतीपुरोगा एकपत्न्यः प्रीयन्ताम्। ब्रह्मपुरोगाः सर्वे वेदाः प्रीयन्ताम्। विष्णुपुरोगाः सर्वे देवाः प्रीयन्ताम्। ऋषयश्छन्दांस्याचार्या वेदा देवा यज्ञाश्च प्रीयन्ताम्। ब्रह्म च ब्राह्म-

को शिरपर रख, फिर दाहिने हाथ से जल भरे हुए कनक-—कलश को पकड़ कर, पृथ्वी पर रक्खे हुए दो पात्रों में से प्रथम में थोड़ा जल गिरावे। जब यजमान जल गिराने लगे, तब ब्राह्मण लोग उपरोक्त "ॐ "शांतिरस्तु" आदि मंत्रों को पढ़ने लगें। यह पढ़ते हुए

 

एताश्च प्रीयन्ताम् । अम्बिकासरस्वत्यौ प्रीयेताम् । श्रद्धामेधे प्रीयेताम् । दुर्गापांचाल्यौ प्रीयेताम् । भगवती कात्यायनी प्रीयताम् । भगवती माहेश्वरी प्रीयताम् । भगवती ऋद्धिकरी प्रीयताम् । भगवती वृद्धिकरी प्रीयताम् । भगवती पुष्टिकरी प्रीयताम् । भगवती तुष्टिकरी प्रीयताम् । भगवन्तौ विघ्नविनायकौ प्रीयताम् । सर्वाः कुलदेवताः प्रीयन्ताम् । सर्वा ग्रामदेवताः प्रीयन्ताम् । सर्वा इष्टदेवताः प्रीयन्ताम् । पुनः द्वितीयपात्रे पातयेत्—हताश्च ब्रह्मद्विषः हताश्च परिपन्थिनः । हताश्च विघ्नकर्तारः । शत्रवः पराभवं यान्तु । शाम्यन्तु घोराणि । शाम्यन्तु पापानि । शाम्यन्त्वीतयः । पुनःप्रथमपात्रे पातयेत्—शुभानि वर्धन्ताम् । शिवा आपः सन्तु । शिवा ऋतवःसन्तु । शिवा अग्नयः सन्तु । शिवा आहुतयः सन्तु । शिवा वनस्पतयः सन्तु । शिवा अतिथयः सन्तु । अहोरात्रे शिवेस्याताम् । निकामे २ नः पर्जन्यो वर्षतु । फलवत्यो न ओषधयः पच्यन्ताम् । योगक्षेमोनः कल्पताम् । शुक्राङ्गारकबुधबृहस्पति शनैश्चरराहुकेतुमसोमसहिता आदित्यपुरोगाः सर्वे ग्रहाः प्रीयन्ताम् । भगवान् नारायणः प्रीयताम्, भगवान्पर्जन्यः प्रीयताम् । भगवान्स्वामी महासेनः प्रीयताम् । पुरोनुवाक्यया यत्पुण्यं तदस्तु । याज्यया यत्पुण्यं तदस्तु । वषट्कारेण यत्पुण्यं तदस्तु । प्रातः



द्वितीयपात्र में जल गिरावे । जो पाप, अशुभ तथा अमङ्गल हो, वह दूर हो, अर्थात् विनष्ट होवे । उपरोक्त मंत्रों द्वारा फिर प्रथम पात्र

सूर्योदये यत्पुण्यं तदस्तु । ततोः यजमानः सुवर्णकलशं भूमौ निधाय प्रथमपात्रेपातितजलेन शिरः संमृज्य सपरिवारगृहांश्चाभिषेचयेत् । द्वितीयपात्रपातितजलमेकान्ते पातयेत् । यजमानो ब्रूयात्—ब्राह्मं पुण्यमहय्च्च सृष्ट्युत्पादनकारकम् । वेदवृक्षोद्भवं पुण्यं तत्पुण्याहं ब्रुवन्तु नः । भो ब्राह्मणाः मम सपरिवारस्य गृहे पुण्याहं भवन्तो ब्रूवन्तु । ( ब्राह्मणाः ) ॐ पुण्याहम् ३ ॥ पुनन्तु मां देवजनाः पुनन्तु मनसा धियः । पुनन्तु व्विश्वाभूतानि जातवेदः पुनीहि मां । (यजमानः) पृथिव्यामुद्धृतायां तु यत्कल्याणं पुराकृतम् । ऋषिभिः सिद्धगन्धर्वैस्तत्कल्याणं ब्रुवन्तु नः । भो ब्राह्मणाः मम सपरिवारस्य गृहे कल्याणं भवन्तो ब्रुवन्तु (ब्राह्मणाः) ॐ कल्याणम् ३ ॥ यथेमां वाचं कल्याणीमावदानि जनेभ्यः । ब्रह्मराजन्याभ्या ँ शूद्रायाचार्य्याय च स्वाय चारणाय च । प्रियो देवानां दक्षिणायै दातुरिह भूयसमयं मे कामः समृद्ध्यतामुपमादो न मतु ॥ ( यजमानः ) सागरस्य च या ऋद्धिर्महालक्ष्म्यादिभिः कृता । सम्पूर्णा सुप्रभावा च तां च ऋद्धिं ब्रुवन्तु

में जल गिरावे । फिर उपरोक्त मंत्र से द्वितीय पात्र में गिरावे । इन मंत्रों को पढ़कर पुनः प्रथम पात्र में जल गिरावे । तत्पश्चात् यजमान कनक—कलश को पृथ्वी पर रखकर, प्रथम पात्र के कल से अपने शिरका मार्जन करके भाई—बन्धु के साथ गृह का भी अभिषेक ( सिंचन ) करे । द्वितीय पात्र का जल एकान्त स्थान में गिरा देवे । यजमान बोलेः—हे विप्रगण ! सकुटुम्ब मेरे घर में आप

नः । भो ब्राह्मणाः मम सपरिवारस्य गृहे ऋद्धिं भवन्तो ब्रुवन्तु । ( ब्राह्मणाः ) ॐ ऋद्धयताम् ३ ॥
वा० सत्रस्य ऋद्धिरस्यगन्मज्योतिरमृताऽअभूम । दिवं पृथिव्याऽअद्ध्यारुहामाविदाम देवान्स्वर्ज्योतिः ॥ (यजमानः) प०
१० स्वस्त्यस्तु ह्यविनाशाख्या नित्यं मङ्गल दायिनी । विनायकप्रिया नित्यं तां च स्वस्तिं ब्रुवन्तु नः । भो
ब्राह्मणाः मम सपरिवारस्य गृहे स्वस्ति भवन्तो ब्रुवन्तु । ( ब्राह्मणाः ) ॐ स्वस्ति ३ ॥ स्वस्तिनऽइन्द्रो
वृद्धश्रवाः स्वस्तिनः पूषा विश्ववेदाः । स्वस्तिनस्तार्क्ष्योऽअरिष्टनेमिः स्वस्तिनो बृहस्पतिर्दधातु ॥ (यजमानः)
समुद्रमथनाज्जाता जगदानन्द कारिका । हरिप्रिया च माङ्गल्या तां श्रियं च ब्रुवन्तु नः ॥ भो ब्राह्मणाः
मम सपरिवारस्य गृहे श्रीरस्त्विति भवन्तो ब्रुवन्तु ॥ ( ब्राह्मणाः ) ॐ अस्तु श्रीः ३ ॥ श्रीश्चते लक्ष्मीश्च
पत्न्यावहोरात्रे पार्श्वे नक्षत्राणि रूपमश्विनौ व्यात्तम् । इष्णन्निषाणामुम्मऽइषाण सर्वलोकम्मऽइषाणः ॥
लोग "पुण्याहवाचन" करें । विप्र समुदाय एक हो साथ "ॐ पुण्याहम्" इस मंत्र को तीन बार पढ़े । यजमान बोलेः—हे ब्राह्मणों !
परिवार के साथ मेरे गृह में आप लोग "कल्याण" कहें । उपरोक्त मन्त्र पढ़कर ब्राह्मण लोग ॐ "कल्याणम्" इसका तीन बार उच्चारण
करें । यजमान बोलेः—हे ब्राह्मणों ! सकुटुम्ब मेरे गृह में आपलोग "ऋद्धि" कहें । इस मंत्र से ब्राह्मणगण तीन बार "ऋद्धयताम्" १०
ऐसा कहें । यजमान बोलेः—हे द्विजगण ! आपलोग मेरे गृह में "स्वस्ति" बोलें । इस मन्त्र को पढ़ कर ब्राह्मण तीन बार "स्वस्ति"

वा० ततस्तिलकाशीर्वादः । अत्र दक्षिणा दानम् ॥ ॐ अद्य पुण्याहवाचनसाङ्गतासिद्ध्यर्थं पुण्याहवाचकेभ्यो नानानामगोत्रेभ्यो ब्राह्मणेभ्य इमां यथाशक्ति हिरण्यदक्षिणां सम्प्रददे इति पुण्याहवाचनम् ॥ ष०

अथ वरणम् ।

११ तत्र पूर्वमाचार्यस्य वरणम् पश्चात्सर्वेषां वरणम् । तद्यथा:—आचार्यं प्रति यजमानो ब्रूयात्—अस्मिन्नासने आस्यताम् । आचार्यो ब्रूयात्—आस्ये । ततो यजमानः नमोस्त्वनन्तायेति मन्त्रेण पादप्रक्षालनं कुर्यात् । मन्त्रो यथा:—नमोस्त्वनन्ताय सहस्रमूर्त्तये सहस्रपादाक्षिशिरोरुबाहवे । सहस्रनाम्ने पुरुषाय शाश्वते सहस्रकोटीयुगधारिणे नमः ॥ १ ॥ नमो ब्रह्मण्यदेवाय गोब्राह्मणहिताय च । जगद्धिताय कृष्णाय गोवि-

बोलें । हे ब्राह्मणों ! आप लोग मेरे घर में "श्रीरस्तु" ऐसा बोलें । इस मन्त्र से ब्राह्मण लोग तीन वार "श्रीरस्तु" बोलें । इसके बाद ब्राह्मण यजमान को तिलक लगावे और आशीर्वाद देवे । इसके बाद ब्राह्मण को यथाशक्ति दक्षिणा देवे ।

यहाँ पर सबसे पहिले आचार्य का वरण करना चाहिये, पीछे ब्रह्मा आदिकों का [ यज्ञ में दश वरण होना चाहिये, कम से कम चार [ आचार्य, ब्रह्मा ऋत्विक्, होता ] तो अवश्य ही होने चाहिये । यजमान आसन देता हुआ आचार्य्य से बोले:—भगवन् ! इस आसन पर विराजिये । आचार्य बोले:—मैं बैठता हूँ । आचार्य्य को आसन पर बैठा कर, यजमान "नमोस्त्वनन्ताय" इस मन्त्र को ११
पढ़ता हुआ उनका पैर धोवे । गन्ध पुष्पादि से आचार्य की पूजा करके, ताम्बूल, पुष्पाक्षत, वस्त्र यज्ञोपवीतादि के साथ उनका वरण

वा० न्दाय नमोनमः ॥ २ ॥ गन्धमाल्यादिभिरभ्यर्च्य ॐ युञ्जन्ति ब्रध्नमरुषं चरन्तं परितस्तुषः रोचन्ते रोच- प०
नादिवि । युञ्जन्त्यस्य काम्या हरीविपक्षसारथे । शोणाधृष्णूनृवाहसा ॥ १ ॥ ॐ अद्येत्यादिनवग्रह मखहो-
१२ मकर्मकर्तुमेभिश्चन्दनताम्बूलकुण्डलांगुलीयककमण्डलुवासोभिराचार्यत्वेन अमुकगोत्रममुकशर्माणममुकवेदा-
ध्यायिनं त्वामहं वृणे । ( आचार्यः ) वृतोऽस्मीति प्रतिवचनं दद्यात् । ॐ व्रतेन दीक्षामाप्नोति दीक्षया-
प्नोति दक्षिणाम् । दक्षिणया श्रद्धामाप्नोति श्रद्धया सत्यमाप्यते । इत्यनेन मन्त्रेण कुशस्थैर्जलबिन्दु-
भिर्यजमानमभिषिञ्चेत् ॥

## अथाचार्यप्रार्थना ।

आचार्यस्तु यथा स्वर्गे शक्रादीनां बृहस्पतिः । तथा त्वं मम यज्ञेऽस्मिन्नाचार्यो भव सुव्रत ॥

करे । यजमान कहे, कि मैं आपको आचार्य स्वीकार करता हूँ । "मैं स्वीकार करता हूँ" ऐसा आचार्य कहे । ॐ व्रतेन से कुशस्थ १२
जलबिन्दु द्वारा आचार्य यजमान का अभिषिंचन करे ।

हे सुव्रत ! जैसे स्वर्ग में इन्द्रादि देवताओं के आचार्य बृहस्पति हैं, वैसे ही आप भी हमारे इस यज्ञ में आचार्य होवें ।

वा० अथ ब्रह्मवरणम् । प०

ब्रह्माणं प्रति यजमानो ब्रूयात्–अस्मिन्नासने आस्यताम् । ( ब्राह्मणः ) आस्ये । ततो यजमानः–न-
१३ मोस्त्वनन्तायेति मन्त्रेण पादप्रक्षालनं कुर्यात् । गन्धपुष्पमाल्यादिभिरभ्यर्च्य ॐ अद्येत्यादिनवग्रहमखहो-
मकर्मणि न्यूनाधिकसंरक्षणार्थमेभिश्चन्दनतांबूलकुण्डलांगुलीयककमण्डलुवासोभिर्ब्रह्मत्वेनामुकगोत्रममुकश-
र्माणममुकवेदाध्यायिनं त्वामहं वृणे । ( ब्राह्मणः ) वृतोऽस्मीति प्रतिवचनम् । ( यजमानः ) यथा चतुर्मुखो
ब्रह्मा सर्ववेदधरः प्रभुः । तथा त्वं मम यज्ञेऽस्मिन्ब्रह्मा भव द्विजोत्तम ॥ १ ॥ ( ब्रह्मा ) ॐ व्रतेन दीक्षा-
माप्नोति दीक्षयाप्नोति दक्षिणाम् । दक्षिणा श्रद्धामाप्नोति श्रद्धया सत्यमाप्यते । इत्यनेन मन्त्रेण
कुशस्थैर्जलविन्दुभिर्यजमानमभिषिञ्चेत् ॥

जिसको ब्रह्मा बनाना हो, उससे यजमान बोलेः–हे ब्रह्मन् ! इस आसन पर बैठिये । ब्राह्मण बोलेः—मैं बैठता हूँ । आसन पर
२ बैठाने के बाद यजमान ब्राह्मण का पैर धोवे और पुष्पचन्दनादि से उसका पूजन करके, उपरोक्त विधि से ब्रह्मा का वरण करे और कहे १३
कि मैं आपको अपने यज्ञ के निरीक्षणार्थ ब्रह्मत्वेन वरण करता हूँ । ब्राह्मण कहे कि मैं आपका वरण स्वीकार करता हूँ । यजमान हाथ
जोड़कर ब्रह्मा से निवेदन करे कि विप्रवर ! जैसे चतुर्मुख ब्रह्मा चारो वेदों के धारण करने में समर्थ हैं, वैसे आप भी मेरे इस यज्ञ में

## अथ ऋत्विग्वरणम् ।

ऋत्विजं प्रति यजमनो ब्रूयात्–इदमासनमास्यताम् ( ऋत्विक् आस्ये ) ततो यजमानः नमोऽस्त्वनन्तायेति मन्त्रेण पादप्रक्षालनं कुर्यात् । गन्धपुष्पमाल्यादिभिरभ्यर्च्य ॐ अद्येत्यादिनवग्रहमखहोमकर्मणि हवनं कर्तुमेभिश्चन्दनताम्बूलकुण्डलाङ्गुलीयककमण्डलुवासोभिः ऋत्विक्त्वेन अमुकगोत्रममुकशर्माणममुकवेदाध्यायिनं त्वामहं वृणे । ( ऋत्विक् ) वृतोऽस्मीति प्रतिवचनम् । ( यजमानः ) ऋग्वेदः पद्मपत्राक्षो गायत्रः सोमदैवतः । अत्रिगोत्रस्तु विप्रेन्द्र ऋत्विक्त्वं मे मखे भव ॥ ३ ॥ ( ऋत्विक् ) ॐ व्रतेन दीक्षामाप्नोति दीक्षयाप्नोति दक्षिणाम् । दक्षिणा श्रद्धामाप्नोति श्रद्धया सत्यमाप्यते ॥ इत्यनेन मन्त्रेण कुशस्थैर्जलविन्दुभिर्यजमानमभिषिञ्चेत् । एवमध्वर्युंहोतारं सदस्यमुपद्रष्टारं च वृणुयात् । अथ सर्वेषां प्रार्थना ॥ भगवंस्त्वं

ब्रह्मा होइये । ब्रह्मा ॐ व्रतेन मंत्र पढ़कर कुशयुक्त जलविन्दु से यजमान का अभिषिंचन करे ।

आसन देकर यजमान ऋत्विक् से कहे, कि यह आसन है, बैठिये । ऋत्विक् बोले:—मैं बैठता हूँ । आसन पर बैठाकर यजमान "नमोस्त्वनंता" इस मंत्र को पढ़ते हुए ऋत्विक् का पाद–प्रक्षालन करे और चन्दन पुष्पादि से उनका वरण करे । उस समय कहे कि मैं आपको हवन करने के लिये ऋत्विग्भाव से स्वीकार करता हूँ । मुझे स्वीकार है–ऐसा ऋत्विक् बोले ।

पिता माता त्वं प्रभुस्त्वं परायणः । त्वत्प्रसादाच्च विप्रर्षे सर्वं मे स्यान्मनोगतम् ॥१॥ आपद्विमोक्षणार्थाय कुरु
वा० यज्ञमतन्द्रितः । ऋत्विग्भिः सहितः शुक्लः सयतः सुसमाहितः ॥ २ ॥ आचार्येण च युक्तः सन् कुरु कर्म ष०
यथोदितम् । भगवन्सर्वधर्मज्ञसर्वधर्मभृतां वर । वितते मम यज्ञेऽस्मिन्नुपद्रष्टा भव द्विज ॥ ३॥
१५

## अथ रक्षाभिधानम् ॥

तत्रादौ श्वेतसर्षपतण्डुलपूर्णपुटकमादाय रक्षासूत्रं सफलदक्षिणाकं गृहीत्वा मन्त्रान् पठित्वा सर्षपाक्षतैर्दिग्रक्षां कुर्यात् ॥ ॐ पूर्वे रक्षतु वाराह आग्नेय्यां गरुडध्वजः ॥ दक्षिणे पद्मनाभस्तु नैर्ऋत्यां मधुसूदनः ॥ पश्चिमे चैव गोविन्दो वायव्यां तु जनार्दनः । उत्तरे श्रीपती रक्षेत् ऐशान्यां हि महेश्वरः ॥ ऊर्ध्वं रक्षतु धाता वो ह्यधोऽनन्तश्च रक्षतु ॥ अनुक्तमपियत् स्थानं रक्षत्वीशो ममाद्रिधृक् ॥

यजमान बोलेः—हे द्विज श्रेष्ठ ! इस यज्ञ में आप मेरे "ऋत्विक्" होइये । ऋत्विक् ॐ व्रतेन मन्त्र को पढ़कर यजमान के ऊपर कुशा से जल छिड़के । इसी प्रकार अध्वर्यु, होता, सदस्य और उपद्रष्टा का भी वरण करे । इस मंत्र से यजमान आचार्यादि की प्रार्थना करे ।

श्वेत सरसों और चावल की थैली लेकर, फल–दक्षिणा के साथ रक्षासूत्र को लिये हुएं ऊपर लिखे मंत्रों से दिग्रक्षा करे । इसके वाद ऊपर लिखे मंत्र को पढ़कर यजमान के दक्षिण हाथमें रक्षासूत्र बाँधे । यजमान के शरीर के बराबर 'रक्षासूत्र' होना चाहिये । १५

ततो रक्षासूत्रम्—ॐ येन बद्धो बली राजा दानवेन्द्रो महाबलः । तेन त्वां प्रतिबध्नामि रक्षे मा
वा० चल मा चल ॥ तद् यजमानगात्रप्रमाणमन्येषां प्रमाणं न ॥ इति आचार्यादिवरणम् ॥

१६ अथ कलशस्थापनम् ।

ॐ भूरसि भूमिरस्यदितिरसि विश्वधाया विश्वस्य भुवनस्य धर्त्री ॥ पृथिवीं यच्छ पृथिवीन्दृ ꣳ ह पृथिवीम्माहि ꣳ सीः ॥ इति मन्त्रेण गन्धादिभिः पृथ्वीमाभिपूज्य हस्तेन स्पर्शं कुर्यात् । ॐ मानस्तोके तनये मानऽआयुषि मानो गोषुमानोऽअश्वेषु रीरिषः ॥ मानो व्वीरान् रुद्रभामिनोव्वधीर्हविष्मन्तः सदमित्वा हवामहे ॥ इति मन्त्रेण कलशे गोमयस्पर्शं कुर्यात् । ॐ धान्यमसि धिनुहि देवान्प्राणायत्वोदानायत्वाव्यानायत्वा । दीर्घामनुप्रसितिमायुषेधान्देवो वः सविता हिरण्यपाणिः प्रतिगृह्णाम्यच्छिद्रेण पाणिना चक्षुषे त्वामहीनाम्प-

यजमान पुर्वाभिमुख बैठकर गन्धादि से पृथिवी की पूजा करके "ॐ भूरसि" इस मंत्रको पढ़कर पृथ्वी का स्पर्श करे । मान० इस
मंत्र को पढ़कर, कलश पर गोमयस्पर्श करे—ॐ धान्यमसि इस मत्र से धान्यराशि को अर्थात् सप्तधान्य को एकत्र करके । आजिघ्र १६
मंत्र से पृथ्वी पर रक्खी हुई धान्यराशि पर कलश का स्पर्श करे । अर्थात् अभीष्ट स्थान पर मिट्टी रख, उसके ऊपर जल आदि फैलाकर कलशस्थापन करे । वरुणस्य मंत्र से कलश में शुद्ध जल देवे । पवित्रे मंत्र से कलश में पवित्री देवे । ऊपर लिखे मंत्र को

योऽसि ॥ इति मन्त्रेण धान्यराशिं कृत्वा ॐ आजिघ्र कलशं मह्यन्त्वाविशन्त्विन्दवः । पुनरूर्ज्जा निवर्त- प०
स्वसानः सहस्रन्धुक्ष्वोरुधारापयस्वती पुनर्माविशताद्रयिः ॥ इति मन्त्रेण कलशस्पर्शं कुर्यात् । ॐ वरुण-
स्योत्तम्भनमसि वरुणस्य स्कम्भसर्ज्जनीस्थो व्वरुणस्यऽऋतसदन्यसि व्वरुणस्यऽऋतसदनमसि व्वरुणस्यऽऋत-
सदनमासीद ॥ इति मन्त्रेण कलशे जलं दद्यात् । ॐ पवित्रस्थो व्वैष्णव्यौ सवितुर्वः प्रवसः उत्पुनाम्य-
१७ च्छिद्रेण पवित्रेण सूर्यस्य रश्मिभिः ॥ इति मन्त्रेण कलशे पवित्रं दद्यात् । ॐ अम्बेऽअम्बिकेऽम्बालिके न
मा नयति कश्चन ॥ ससस्त्यश्वकः सुभद्रिकां काम्पीलवासिनीम् ॥ इति मन्त्रेण कलशे पञ्चपल्लवान् दद्यात् ।
ॐ प्राणाय स्वाहाऽपानाय स्वाहा व्यानाय स्वाहा इति मन्त्रेण कलशे ताम्बूलं दद्यात् । ॐ याः फलि-
नीर्य्याऽअफला अपुष्पा याश्च पुष्पिणीः । बृहस्पतिप्रसूता स्तानो मुञ्चन्त्व ᳪ हसः । इति मन्त्रेण कलशे

पढ़कर कलश में पंचपल्लव ( आम, पीपर, पाकड़, गूलर, वट का पल्लव ) देवे । प्राणाय० मंत्र से कलश में ताम्बूल देवे । याः फलिनी मंत्र से कलश में कसैली अथवा नारियल देवे । ॐ हिरण्य० मन्त्र से कलश में सुवर्ण अथवा अन्य द्रव्य देवे । इस मंत्र से कलश के निकट पूर्व दिशा में—अथवा उसके अगल बगल—एक दूसरे पात्र में दीप को रखे । यही कलश का स्वरूप है । [] १७

[] आज कल लोकाचार की प्रधानता से सर्वत्र कलश के ऊपर ही दीपक रखा जाता है । यह अशास्त्रीय भ्रमोत्पादक एवं अमंगलकारी है ।

पूंगीफलं नारिकेलं वा दद्यात् । ॐ हिरण्यगर्भः समवर्ततताग्रे भूतस्य जातः पतिरेक आसीत् । सदाधार प०
व।० पृथिवीं द्यामुतेमां कस्मै देवाय हविषा विधेम ॥ इति मन्त्रेण कलशे हिरण्यम् अन्यद्रव्यं वा दद्यात् ।
१८ ॐ अग्निर्ज्योतिर्ज्योतिरग्निः स्वाहा । सूर्यो ज्योतिर्ज्योतिः सूर्यः स्वाहा । अग्निर्वर्चो ज्योतिर्वर्चः स्वाहा ।
सूर्यो वर्चो ज्योतिर्वर्चः स्वाहा । ज्योतिः सूर्यः सूर्यो ज्योतिः स्वाहा ॥ इति मन्त्रेण कलशसमीपे
पूर्वदिशि एकस्मिन् पात्रे दीपं निदध्यात् ॥ इति कलशस्वरूपम् ॥

## अथ कलशाधिष्ठातृदेवतानामावाहनम् ।

ॐ सरितः सागराः शैलास्तीर्थानि जलदा नदाः । आयान्तु यजमानस्य दुरितक्षयकारकाः ॥ इति मन्त्रेण कलशे गन्धाक्षतपातः ॥ कलशस्य मुखे विष्णुः कण्ठे रुद्रः समाश्रितः । मूले त्वस्य स्थितो ब्रह्मा मध्ये मातृगणाः स्मृताः ॥ कुक्षौ तु सागराः सप्त सप्तद्वीपा वसुन्धरा । ऋग्वेदोऽथ यजुर्वेदः सामवेदो

ॐ सरितः मंत्र को पढ़कर कलश पर गन्धमिश्रित अक्षत छोड़े । १८

कलश इस मंत्र से देवताओं का आवाहन और पूजन करे । इस पूजन के पहिले उपरोक्त वाक्य से संकल्प करना चाहिये । " ॐ कलशाधिष्ठातृदेवताभ्यो नमः " इस मंत्र से गन्ध, अक्षत, पुष्प, धूप, दीप और नैवेद्य–आदि से विधिवत् पूजा करके हाथ में

ह्यथर्वणः । अङ्गैश्च सहिताः सर्वे कलशं तु समाश्रिताः ॥ इत्यावाह्य पूजनं कुर्य्यात् ॥ तत्रादौ सङ्कल्पः ॥ महामाङ्गल्यप्रदे मासोत्तमेऽमुकमासेऽमुकपक्षेऽमुकतिथौ अमुकगोत्रस्यामुकशर्मणः सपरिवारस्य निखिलकामनावाप्त्यर्थं कर्तव्यामुकतृप्तिजनकामुककर्म कर्तुं कलशाधिष्ठातृदेवतानां पूजनमहं करिष्ये ॥ इति संकल्प्य ॥ ॐ कलशाधिष्ठातृदेवताभ्यो नमः इति मन्त्रेण गन्धादिभिः सम्पूज्य पुष्पाञ्जलिं निवेद्य नतिं कुर्यात् ॥

देवदानवसंवादे मथ्यमाने महोदधौ । उत्पन्नोऽसि तदा कुम्भ विधृतो विष्णुना स्वयम् ॥ त्वत्तोये सर्वतीर्थानि देवाः सर्वे त्वयि स्थिताः । त्वयि तिष्ठन्ति भूतानि त्वयि प्राणाः प्रतिष्ठिताः ॥ शिवः स्वयं त्वमेवासि विष्णुस्त्वं च प्रजापतिः । आदित्या वसवो रुद्रा विश्वेदेवाः सपैतृकाः ॥ त्वयि तिष्ठन्ति सर्वेऽपि ये च कामफलप्रदाः । त्वत्प्रसादादिमं यज्ञं कर्तुमीहे जलोद्भव ॥ सान्निध्यं कुरु मे देव प्रसन्नो भव सर्वदा ।

पुष्पाञ्जलि लेकर देवदानव मन्त्रद्वारा प्रणाम करे ।

यजमान हाथ में अक्षत, पुष्प लेकर उपरोक्त मन्त्रों द्वारा प्रार्थना करे । अब कलश के आगे अर्थात् पश्चिम दिशा में गौरी गणेश का पूजन करे । पूजन के पहिले गन्धाक्षत पुष्पों को लेकर ॐ एह्येहि० मन्त्र से श्रीगणेशजी का आवाहन करे । उपरोक्त मन्त्रों से उन २ पदार्थों को गणेशजी के लिये चढ़ावे जो उन मन्त्रों में कहे गये हैं जैसे—"एतत्पाद्यं गणपतये नमः" यह पाद्य ( पैर धोने

प०

## अथ गणेश पूजनम् ।

वा० अथ कलशाग्रे पश्चिमदिशि गणेशाम्बिकयोः पूजनम् ॥ तत्रादौ हस्ते गन्धाक्षत पुष्पाणि गृहीत्वा गणेशावाहनं कुर्यात् ॥ ॐ एह्येहि हेरम्ब महेशपुत्र समस्तविघ्नौघविनाशदक्ष । माङ्गल्य पूजाप्रथमप्रधान
२० गृहाण पूजां भगवन्नमस्ते ॥ ॐ गणानांत्वा गणपति ꣳ हवामहे प्रियाणांत्वा प्रियपति ꣳ हवामहे निधीनां त्वा निधिपति ꣳ हवामहे व्वसो मम । आहमजानि गर्भधमा त्वमजासि गर्भधम् ॥ आगच्छ भगवन्देव स्वस्थानात्परमेश्वर । अहं पूजां करिष्यामि सदा त्वं सम्मुखो भव ॥ १ ॥ इत्यावाहय पूजयेत् ॥ एतत्पाद्यं गणपतये नमः । एषोऽर्घो गणपतये नमः । एतत्स्नानीयं जलं गणपतये नमः । इमे वस्त्रयज्ञोपवीतं- गणपतये नमः । इदं गन्धं गणपतये नमः । इमे अक्षताः गणपतये नमः । इदं पुष्पं माल्यं च गणपतये नमः । ॐ धूरसि धूर्व धूर्वन्तं धूर्वतं योऽस्मान्धूर्वातितं धूर्वयं वयं धूर्वामः । देवानामसि वह्नितम ꣳ २०

का जल ) आपके लिये है । इसी प्रकार " फल दक्षिणां च गणपतये नमः " कह कर उन्हें फल तथा दक्षिणा चढ़ावे-इत्यादि ।

यजमान अर्घ-पात्र, में जल, पुष्प, पुंगीफल, दूर्वा और चन्दन आदि को ले उपरोक्त मन्त्रों को पढ़कर गणेशजी के लिये अर्घ देवे । हे गणेशजी ! चरणों में समर्पित इस पुष्पांजलि को ग्रहण कीजिये-ऐसा कहकर, अपनी की हुई पूजा विधि गणेशजीको

सस्नितमं पप्रितमं जुष्टतमं देवहूतमम् ॥ इति मन्त्रेण धूपं गणपतयेनमः। ॐ अग्निर्ज्योतिरिति मन्त्रेण दीपं गणपतये नमः। नैवेद्यं गणपतये नमः। आचमनीयं गणपतये नमः। ताम्बूलं गणपतये नमः। फलं दक्षिणां च गणपतये नमः।

अथ विशेषार्घः।

रक्ष रक्ष गणाध्यक्ष रक्ष त्रैलोक्यरक्षक। भक्तानामभयं कर्ता त्राता भव भवार्णवात् ॥ १ ॥
द्वैमातुर कृपासिन्धो षाण्मातुराग्रज प्रभो। वरदस्त्वं वरं देहि वाञ्छितं वाञ्छितार्थद ॥ २ ॥
गृहाणार्घ्यं मया दत्तं सर्वदेवनमस्कृतं। अनेन फलदानेन फलदोस्तु सदा मम ॥३॥ इति विशेषार्घः ॥

अथ पुष्पाञ्जलिः ॥ मालतीमल्लिकाजातीशतपत्रादिसंयुतम्। पुष्पाञ्जलिं गृहाणेश तव पादयुगार्पितम् ॥ इति पुष्पाञ्जलिं दत्त्वा। एतान्यर्चनानि पाद्यार्घस्नान वस्त्र यज्ञोपवीत गन्धाक्षत पुष्पधूपदीपनैवद्याचमनीयताम्बूलफल दक्षिणापुष्पाञ्जल्यन्तानि परिपूर्णानि भवन्तु। अनेन पूजनेन गणपतिः प्रीय-

समर्पण करे और कहे, कि " यह हमारी पूजा परिपूर्ण हो और मेरे इस पूजन से श्रीगणेशजी तृप्त होवें। इसके बाद उपरोक्त श्लोक से गणेशजी की प्रार्थना करे।

ऊपर लिखे हुए वैदिक तथा तांत्रिक मन्त्रों से यथा योग्य ब्राह्मण, क्षत्रिय वैश्य और शूद्र गौरी देवी का आवाहन और पूजन

ताम् ॥ अथ प्रार्थना । विघ्नेश्वराय वरदाय सुरप्रियाय लम्बोदराय सकलाय जगद्धिताय । नागाननाय प०
वा० श्रुतियज्ञविभूषिताय गौरी सुताय गणनाथ नमो नमस्ते ॥ इति प्रार्थना ॥

## अथ गौरी पूजनम् ।

२२ ॐ श्रीश्चते लक्ष्मीश्च पत्न्यावहोरात्रे पार्श्वे नक्षत्राणि रूपमश्विनौ व्यात्तम् ॥ इष्णन्न् निषाणामुम्मऽ इषाण सर्वलोकं मऽइषाण ॥ १ ॥ सर्वमङ्गलमाङ्गल्ये शिवे सर्वार्थसाधिके । शरण्येत्र्यम्बके गौरि नारायणि नमोऽस्तु ते ॥ २ ॥ ओं गौर्यै नमः । इत्यनेन पाद्यादिभिः सम्पूज्य—

कुंकुमं कामदं दिव्यं कामनाकामसम्भवम् । कुंकुमेनार्चितं देवि गृहाण परमेश्वरि ॥ १ ॥
हरिद्रा निर्मितं देवि सौभाग्य सुख सम्पदा । अतस्त्वां पूजयिष्यामि गृहाण परमेश्वरि ॥ २ ॥
अबीरं च गुलालं च चोवा चन्दनमेव च । अबीरेणार्चिता देवि अतः शान्तिं प्रयच्छमे ॥ ३ ॥

करें । अर्थात् द्विजातिमात्र वैदिक मन्त्र से और शूद्र तथा स्त्री तांत्रिक ( पौराणिक ) मन्त्र से पूजन करें, क्योंकि स्त्री और शूद्र को वेदाध्ययन का अधिकार नहीं है । “ ॐ गौर्यै ” इस मन्त्र से गंधाक्षतादि से गौरी का पूजन करके—१ मन्त्र से गौरी देवी के लिये कुंकुम समर्पण करे । २ मन्त्रे से देवी को रोरी समर्पण करे । ३ मन्त्र से देवी को अबीर–गुलालादि चढ़ावे । ४ मन्त्र से देवी को २१

सिन्दूरं शोभनं रक्तं सौभाग्यं प्रियवर्धनम् । सुखदं मोक्षदं चैव सिन्दूरं प्रतिगृह्यताम् ॥ ४ ॥
अक्षताश्च सुरश्रेष्ठ कुंकुमाक्ताः सुशोभिताः । मया निवेदिता भक्त्या गृहाण परमेश्वरि ॥ ५ ॥
माल्यादीनि सुगन्धीनि मालत्यादीनि वै प्रभो । मयाहृतानि पूजार्थं पुष्पाणि प्रतिगृह्यताम् ॥ ६ ॥
वनस्पतिरसोत्पन्नः गन्धाढ्यः सुमनोहरः । आघ्रेयः सर्वदेवानां धूपोऽयं प्रतिगृह्यताम् ॥ ७ ॥
साज्यं च वर्तिसंयुक्तं वह्निना योजितं मया । दीपं गृहाण देवेशि त्रैलोक्यतिमिरापहम् ॥ ८ ॥
शर्कराखण्डखाद्यानि दधिक्षीरघृतानि च । आहारं भक्ष्यभोज्यं च नैवेद्यं प्रतिगृह्यताम् ॥ ९ ॥
गंगाजलं समानीतं सुवर्णकलशोद्धृतम् । आचम्यं चैव देवेशि प्रीत्यर्थं प्रतिगृह्यताम् ॥ १० ॥
इदं फलं मया देवि स्थापितं पुरतस्तव । तेन मे सफलावाप्तिर्भवेज्जन्मनि जन्मनि ॥ ११ ॥
हिरण्यगर्भगर्भस्थं हेमबीजं विभावसोः । अनन्तपुण्यफलदमतः शान्तिं प्रयच्छ मे ॥ १२ ॥

सिन्दूर चढ़ावे । ५ मंत्र से देवी के लिये अक्षत चढ़ावे । ६ मन्त्र से फूल चढ़ावे । ७ मन्त्र से धूप समर्पण करे । ८ मन्त्र से घृत-दीप समर्पण करे । ९ मन्त्र से नैवेद्य अर्पण करे । १० मन्त्र से आचमन करने को जल समर्पण करे । ११ मन्त्र से ऋतुफल समर्पण करे । १२ मन्त्र को पढ़कर देवी के लिये यथाशक्ति दक्षिणा द्रव्य चढ़ावे । १३ मन्त्र को पढ़ते हुए देवी की प्रदक्षिणा करे । इसके

यानि कानि च पापानि जन्मान्तरकृतानिच । तानि सर्वाणि नश्यन्ति प्रदक्षिणाः पदे पदे ॥ १३ ॥

 पुष्पाञ्जलिं निवेद्य नतिं कुर्यात् ॥ इति संक्षेपतो गौरीपूजनम् । अथ ग्रहाणां स्थापनं पूजनञ्च । 

तद्यथा—रक्तपुष्पाक्षतान् गृहीत्वा आवाहयेत् । सप्तम्यां विशाखान्वितायां कलिङ्गजातं कश्यपगोत्रं लोहितवर्णं वर्तुलाकृतिं मण्डलमध्यस्थं प्राङ्मुखं द्विभुजं पद्महस्तं सप्ताश्वरथवाहनं क्षत्रियाधिपतिमीश्वराधिदैवतमग्निप्रत्यधिदैवतसहितं सूर्यमावाहयामि ॐ भूर्भुवःस्वः भगवन् सूर्य इहागच्छ इह तिष्ठ इमं यज्ञमभिरक्ष । इत्यावाह्य, आकृष्णेन रजसा वर्तमानो निवेशयन्नमृतं मर्त्यं च । हिरण्ययेन सविता रथेना देवो याति भुवनानि पश्यन् ॥ पद्मासनः पद्मकरः पद्मगर्भसमद्युतिः । सप्ताश्वः सप्तरज्जुश्च द्विभुजः स्यात्सदा रविः ॥ इति मन्त्रेण पाद्यादिभिः सूर्य्यं सम्पूज्यानेनैव मन्त्रेण रक्तपताकादानम् । इति सूर्य

बाद पुष्पाञ्जलि देकर प्रणाम करे ।

लाल फूल और अक्षत लेकर "सप्तम्यां" से "सूर्यमावाहयामि" तक उपरोक्त मन्त्र को पढ़कर सूर्य का आवाहन करे और कहे कि हे सूर्य भगवान् ! यहाँ आइये, मेरे इस यज्ञ में स्थित होकर इसकी रक्षा कीजिये । [ इसी प्रकार नवो ग्रहों के आवाहनान्त में भी कहना चाहिये । ] " ॐ आकृष्णेन " से लेकर " रविः " तक इस मन्त्र को पढ़कर गन्धादि से सूर्य देवता की विधिवत् पूजा करके 

वा० पूजनम् ॥ १ ॥ अथ चन्द्रावाहनम् श्वेतपुष्पाक्षतान् गृहीत्वाऽऽवाहयेत्—ॐ चतुर्दश्यां कृत्तिकान्वितायां
समुद्रजातमत्रिगोत्रं श्वेतवर्णं चतुरस्राकृतिं मण्डलात्पूर्वदक्षिणदिक्स्थं पश्चिमाभिमुखं दशाश्वरथवाहनं
२५ निशापतिमुमाधिदैवतं जलप्रत्यधिदैवतसहितं चन्द्रमावाहयामि । ॐ भूर्भुवः स्वः चन्द्र इहागच्छ इह
तिष्ठ इमं यज्ञमभिरक्ष इत्यावाह्य ॐ इमं देवा असपत्न ꣳ सुवध्वं महते क्षत्राय महते ज्यैष्ठाय महते जान-
राज्यायेन्द्रस्येन्द्रियाय ॥ इमममुष्य पुत्रममुष्यै पुत्रमस्यै विशएष वोमी राजा सोमोऽस्माकं ब्राह्मणाना ꣳ
राजा ॥ इति मन्त्रेण पाद्यादिभिश्चन्द्रं संपूज्यानेनैव मन्त्रेण श्वेतपताकादानम् ॥ इतिचन्द्रपूजनम् ॥ २ ॥
अथ भौमावाहनम् ॥ रक्तपुष्पाक्षतान्गृहीत्वा आवाहयेत् । दशम्यां पूर्वाषाढान्वितायामवन्तिजातं भारद्वाज
गोत्रं रक्तवर्णं त्रिकोणमण्डलाद्दक्षिणदिग्विभागस्थं दक्षिणाभिमुखं मेषवाहनं क्षत्रियाधिपतिं यज्ञमभिरक्ष
इत्यावाह्य ॐ अग्निमूर्द्धा दिवः ककुत्पतिः पृथिव्या अयम् । अपा ꣳ रेता ꣳ सिजिन्वति इति मन्त्रेण

३ फिर इसी मन्त्र से लाल पताका का दान करे । सफेद फूल और अक्षत ले, "ॐ चतुर्दश्यां" से "चन्द्रमावाहयामि" तक पढ़कर
चन्द्रमा का आवाहन करे, और "ॐ इमंदेवेति" मन्त्र को पढ़कर उनका पूजन तथा श्वेत पताका का दान करे । लाल फूल और अक्षत २५
लेकर उपरोक्त मंत्र से मंगल ग्रह का आवाहन करे और "अग्निमूर्धेति" इस मंत्र से उनका पूजन तथा उनके लिये रक्त पताका दान

पाद्यादिभिः भौमं संपूज्य अनेनैव मन्त्रेण रक्तपताकादानम् ॥ इति भौमपूजनम् ॥३॥ अथ बुधावाहनम् ॥
वा० हरितपुष्पाक्षतान् गृहीत्वा आवाहयेत् । द्वादश्यां धनिष्ठान्वितायां मगधदेशजातमत्रिगोत्रं हरिद्वर्णं बाणा- प०
२६ कृतिं मण्डलात्पूर्वोत्तरस्थमुत्तराभिमुखं शूद्राधिपतिं सिंहवाहनं नारायणाधिदेवतं विष्णुप्रत्यधिदेवतसहितं
बुधमावाहयामि । ॐ भूर्भुवः स्वः बुध इहागच्छ इह तिष्ठ इमं यज्ञमभिरक्ष इत्यावाह्य ॐ उद्बुध्यस्वाग्ने
प्रतिजागृहित्व मिष्टापूर्ते स ठं सृजेथामयञ्च । अस्मिंत्सधस्थे अध्युत्तरस्मिंविश्वे देवायजमानश्चसीदत ॥ इति
मन्त्रेण पाद्यादिभिर्बुधं संपूज्य अनेनैव मन्त्रेण हरितपताकादानम् ॥ इति बुधपूजनम् ॥४॥ अथ गुर्वावा-
हनम् ॥ पीतपुष्पाक्षतान् गृहीत्वा आवाहयेत् । एकादश्या मुत्तराफाल्गुनीयुतायां सिन्धु देशजातमाङ्गि-
रसगोत्रं गोरोचनाभं दीर्घचतुष्कोणाकृतिं मण्डलादुत्तरस्थितमुत्तराभिमुखं सिंहवाहनं ब्रह्माधिदेवतमिन्द्रप्रत्यधि-
दैवतसहितं गुरुमावाहयामि ॥ ॐ भूर्भुवः स्वः गुरो इहागच्छ इह तिष्ठ इमं यज्ञमभिरक्ष इत्यावाह्य ॐ

करे हरित फूल और अक्षत लेकर, "द्वादश्यां" से "यज्ञमभिरक्ष" तक मंत्र पढ़कर बुध देवता का आवाहन करे, और "ॐ उद्बुध्य
इति" मंत्र द्वारा उनका पूजन तथा उनके लिये हरित पताका दान करे। पीला फूल और अक्षत हाथ में ले "एकादश्यां से" "इमं
यज्ञमभिरक्ष" तक पढ़कर, गुरुदेव का आवाहन करे और "ॐबृहस्पते" इत्यादि मन्त्र को पढ़कर गुरु का पूजन तथा उनके लिये पीत २६

बृहस्पते अतियदर्यो अर्हाद्युमद्विभातिक्रतुमज्जनेषु। यद्दीदयच्छवसऋतप्रजाततदस्मासुद्रविणंधेहि चित्रम् ॥
वा० इति मन्त्रेण पाद्यादिभिः गुरुं संपूज्य अनेनैव मन्त्रेण पीतपताकादानम् ॥ इति गुरुपूजनम् ॥ ५ ॥ प०
अथ शुक्रावाहनम् ॥ श्वेतपुष्पाक्षतान् गृहीत्वा आवाहयेत्। नवम्यां पुष्ययुतायां भोजकटे जातं भार्गवगोत्रं
२७ शुक्लवर्णं पञ्चकोणं। मण्डलात्पूर्वदिक्स्थं पूर्वाभिमुखं श्वेताश्ववाहनमिन्द्राधिदेवतमिन्द्राणीप्रत्यधिदेवतसहितं
शुक्रमावाहयामि ॥ ॐ भूर्भुवः स्वः शुक्र इहागच्छ इह तिष्ठ इमं यज्ञमभिरक्ष इति आवाह्य ॐ अन्नात्प-
रिस्रुतो रसं ब्रह्मणा व्यपिबत्क्षत्रम्पयः सोमम्प्रजापतिः। ऋतेनसत्य मिन्द्रियं विपानꣳ शुक्र मन्ध स इन्द्रस्ये
न्द्रिय मिदंपयोऽमृतम्मधु इति मन्त्रेण पाद्यादिभिः शुक्रं संपूज्य अनेनैव मन्त्रेण श्वेतपताकादानम् ॥
इति शुक्रपूजनम् ॥ ६ ॥ अथ शन्यावाहनम् ॥ बिल्वपत्राक्षतान् गृहीत्वा आवाहयेत्। अष्टम्यां रेवती
युतायां सौराष्ट्रजातं कश्यपगोत्रं लोहवर्णन् धनुराकृतिं मण्डलात्पश्चिमस्थं पश्चिमाभिमुखं गृध्रवाहनं संकर-

पताका दान करे। श्वेत पुष्प और अक्षत हाथ में लेकर "नवम्यां" से लेकर "इमं यक्षममिरक्ष" तक पढ़कर शुक्र का आवाहन करे और "ॐ अन्नात्परीति" इस मन्त्र से गन्धादि द्वारा शुक्र की पूजा करके इसी मन्त्र से उन्हें श्वेत पताका देवे। बिल्वपत्र और अक्षत हाथ में लेकर "अष्टम्यां" से "यज्ञमभिरक्ष" तक मन्त्र पढ़कर शनिग्रह का आवाहन करे और "ॐ शन्नोदेवीति" इस मन्त्र से उनका २७

ग्र० जातिं यमाधिदैवतं प्रजापतिप्रत्यधिदैवतसहितं शनिमावाहयामि । ॐ भूर्भुवः स्वः शने इहागच्छ इह तिष्ठ इमं यज्ञमभिरक्ष इति आवाह्य ॐ शन्नो देवीरभिष्टय आपोभवन्तु पीतये । शंयोरभि स्रवन्तुनः । इति मन्त्रेण पाद्यादिभिः शनिं संपूज्य अनेनैव मन्त्रेण कृष्णपताका दानम् ॥ इति शनिपूजनम् ॥ ७ ॥ प०

अथ राह्वावाहनम् ॥ कृष्णपुष्पाक्षतान् गृहीत्वा आवाहयेत् । पौर्णमास्यां भरणीयुतायां बर्बरजातं पैठीनसिगोत्रं कृष्णवर्णं शूर्पाकृतिं मण्डलात्पश्चिमदक्षिणदिक्स्थं दक्षिणाभिमुखं शूद्राधिपतिं सिंहवाहनं कालाधिदैवतं सर्पप्रत्यधिदैवतसहितं राहुमावाहयामि । ॐ भूर्भुवः स्वः राहो इहागच्छ इह तिष्ठ इमं यज्ञमभिरक्ष इत्यावाह्य ॐ कयानश्चित्र आभुवदूती सदा वृधः सखा । कया शचिष्ठया वृता । इति मन्त्रेण पद्यादिभिः राहुं संपूज्यानेनैव मंत्रेण कृष्णपताकादानम् ॥ इति राहुपूजनम् ॥ ८ ॥ अथ केत्वावाहनम् ॥ कृष्णपुष्पाक्षतान् गृहीत्वा आवाहयेत् । आमावस्यायामाश्लेषान्वितायां जातं जैमिनिगोत्रं धूम्रवर्णं ध्वजाकृतिं

पूजन तथा काली पताका दान करे । काला फूल और अक्षत लेकर "पौर्णमास्यां" से "इमं यज्ञमभिरक्ष" यहाँ तक पढ़ कर राहु का २८
आवाहन करे और "ॐ कयानश्चित्रेति" इस मन्त्र से उनका पूजन तथा इसी मन्त्र से उनके लिये काली पताका दान करे । काला पुष्प और अक्षत को लेकर "अमावास्यायां" से "इमं यज्ञमभिरक्ष" तक पढ़कर केतुग्रह का आवाहन करे और "ॐ केतुं कृण्वन्निति" इस

कपोतवाहनमन्त्यजाधिपतिं मण्डलात्पश्चिमोत्तरस्थं दक्षिणाभिमुखं चित्रगुप्ताधिदेवतं ब्रह्मप्रत्यधिदेवतसहितं
वा० केतुमावाहयामि । ॐ भूर्भुवः स्वः केतो इहागच्छ इह तिष्ठ इमं यज्ञमभिरक्ष इत्यावाह्य ॐ केतुं कृण्वन्न प०
केतवेपेशोमर्या अपेशसे । समुषद्भिरजायथाः इति मन्त्रेण पाद्यादिभिः केतुं संपूज्यानेनैव मन्त्रेण धूम्र
२६ पताकादानम् ॥ इति केतुपूजनम् ॥ ६ ॥ ततो गणेशकलशगौरीशानभागे यज्ञेश्वरकलशस्थापनम् ।
तद्यथा—अश्वत्थगौरमृत्तिकापञ्चरत्नसर्वौषधिफलद्रव्यवस्त्राम्रपल्लवसंयुतकलश मैशान्यां स्थापयेत् । तत्र
पठनीयो मन्त्रः—ॐ सूर्यायत्वायुषं निर्वपयामि ॐ चन्द्राय त्वायुषं निर्वपयामि । अनेनैव मन्त्रेण कलशमध्ये
अक्षतगन्धपुष्पाणांप्रक्षेपः । अनेनैव कलशजलेन यज्ञान्ते यजमानमभिषिञ्चेत् ॥

इति नवग्रह पूजनविधिः ।

मन्त्र से गन्धादि द्वारा विधिवत् पूजन करके इसी मन्त्र से केतु के लिये धूम्र पताका दान करे । इसके बाद गणेश कलश और गौरीदेवी
के ईशान भाग में कुवेर का कलश स्थापित करे । अर्थात् पंचपल्लव, सप्तमृत्तिका सप्तधान्य, सर्वौषधि, पंचरत्न, नारियल अथवा पूगी-
फल, दक्षिणा और वस्त्र के सहित उस कलश को ईशान कोण में स्थापित करे । "ॐ सूर्यायेति" इस मन्त्र से स्थापन और गन्धाक्षत २६
पुष्पादि से पूजन करे । यज्ञान्त में इसी कुवेर कलश के जल से यजमान को अभिषिंचिन करना चाहिये ।

## ॥ अथ सर्वतोभद्रमण्डल-देवतापूजनम् ॥

का० अथ सर्वतोभद्रमण्डलदेवताःपुराणोक्तरीत्या लिख्यन्ते ॥ त्वं वै चतुर्मुखो ब्रह्मा सत्यलोके पितामहः । प०
३० आगच्छ मण्डले चास्मिन्मम सर्वार्थसिद्धये ॥ इति मध्ये ब्रह्माणम् ॥ १ ॥ क्षीरोदार्णवसंभूतं लक्ष्मीबन्धु निशाकरम् । मण्डले स्थापयाम्यत्र सोमं सर्वार्थसिद्धये ॥ इति उत्तरे सोमम् ॥ २ ॥ ईशानीपालकं श्रेष्ठं सर्वलोकभयंकरम् । मण्डले स्थापयामीह ईशानं सर्वसिद्धये ॥ इति ऐशान्यामीशानम् ॥३॥ सर्वलोकाधिकं श्रेष्ठं देवर्षीणां च पालकम् । पूर्वदिक्पालकं देवराजं वै स्थापयाम्यहम् ॥ इति पूर्वे इन्द्रम् ॥ ४ ॥ त्रिपादं मेषवाहं च त्रिशिखं च त्रिलोचनम् । आग्नेय्यां स्थापयाम्यत्र ह्यग्निं पुरुषमुत्तमम् इत्याग्नेय्यामग्निम् ॥ ५ ॥ अन्तकः सर्वलोकानां धर्मराज इति श्रुतः । अतस्त्वां स्थापयाम्यत्र दक्षिणस्यां स्थिरो भव ॥ इति दक्षिणे यमम् ॥ ६ ॥ नैऋत्यां वसतिर्यस्य घोररूपी सदा हि यः । निर्ऋतिं स्थापयाम्यत्र नैर्ऋत्यां मण्डले शुभे ॥

यहाँ पर पुराणोक्त मण्डल देवता के स्थापन को लिखते हैं । त्वंवै मन्त्र से मण्डल के मध्य भाग में ब्रह्मा का स्थापन करे । क्षीरोदेति मन्त्र से उत्तर दिशा में चन्द्रमा का स्थापन करे । ईशा मन्त्र से ऐशान्य कोण में ईशान देवता का स्थापन करे । सर्व मन्त्र से ३०
पूर्व दिशा में इन्द्र का स्थापन करे । त्रिपा मन्त्र से अग्निकोण में अग्नि पुरुष का स्थापन करे । अन्त मन्त्र से दक्षिण दिशा में यमराज का स्थापन करे । नैर्ऋत्यकोण में निर्ऋति देव को स्थापन करे । अपां मन्त्र से पश्चिम दिशा में वरुण देवता का स्थापन करे ।

इति नैर्ऋत्यां निर्ऋतिम् ॥ ७ ॥ अपाम्पतिं पाशधरं यादसाम्पतिमुत्तमम् । वरुणं स्थापयाम्यत्र वारुण्यां
वा० मण्डले शुभे ॥ इति पश्चिमे वरुणम् ॥ ८ ॥ आशुगं स्पर्शबोधं च गन्धवाहं सुशीतलम् । मण्डले स्थाप- प०
यामीह वायव्यां वायुमुत्तमम् ॥ इति वायव्यां वायुम् ॥ ९ ॥ धरो ध्रुवश्च सोमश्चाप्यांशुगश्चानिलोऽनलः ।
३१ प्रत्यूषश्च प्रभासश्च वस्वष्टकमिह स्थिरम् ॥ इति वायुसोमयोर्मध्ये वसून् ॥ १० ॥ त्रिनेत्राय त्रिरूपाय त्रिजटाय
महात्मने । नमस्कृत्वा स्थापयामि मण्डलोपरि मध्यतः ॥ इति सोमेशानयोर्मध्ये रुद्रम् ॥ ११ ॥ आदित्यं
भास्करं चैव प्रभाकरदिवाकरौ । सूर्य्यं ग्रहपतिं चैव ब्रध्नं तेजो हरिद्धरिम् । सप्ताश्वं वेदमूर्तिं च त्रिदैवत्यं
क्रमेण च । इत्यादिद्वादशादित्यान्मण्डले स्थापयाम्यहम् ॥ इतीशानेन्द्रयोर्मध्ये द्वादशादित्यान् ॥ १२ ॥
अश्विनौ देववैद्यौ च सर्गस्थित्यन्तकारकौ । मण्डले स्थापयित्वा तु पूजयामीष्टसिद्धये ॥ इति इन्द्राग्न्योर्मध्ये
अश्विनौ ॥ १३ ॥ दैवे कर्मणि पित्र्ये च ये मुख्यास्सर्वदा शुभाः । मण्डले स्थापयामीह सुखानुष्ठानसिद्धये

माशु० मंत्र से वायव्य कोण में वायु का स्थापन करे । वायु और सोम के मध्य में आठो वसुओं (धरध्रुव, सोम, आशुग, अनिल, वायु
प्रत्युष और प्रभास ) का स्थापन करे । त्रिने मंत्र से सोम और ईशान के मध्य में ११ रुद्र का स्थापन करे । आदित्यं मन्त्र द्वारा ईशान ३१
और इन्द्र के बीच में १२ सूर्य का स्थापन करे । अश्वि लिखे मन्त्र से इन्द्र और अग्नि के मध्य में दोनों अश्विनीकुमारों का स्थापन

इति अग्नियमयोर्मध्ये विश्वेदेवान् ॥ १४॥ यदृच्छया पर्यटति यक्षराजा महीतले । कौतुकं प्रेक्षितुं चास्मिन्मण्डले सन्तु सुस्थिराः ॥ इति यमनिर्ऋतयोर्मध्ये यक्षान् ॥ १५ ॥ अनन्तो वासुकिश्चैव कालीयो मणिभद्रकः ।
३१ शंखश्च शंखपालश्च कर्कोटकधनञ्जयौ ॥ धृतराष्ट्रश्च नागेशाः प्रगृह्णन्तु ममार्चनम् ॥ इति निर्ऋतिवरुणयोर्मध्ये नागान् ॥ १६ ॥ उर्वशीप्रमुखाः सर्वाः स्ववेश्याः शक्रपूजिताः । गन्धर्वैश्च सहायास्तु मण्डलेऽस्मिन्सुशोभनाः ॥ इति वरुणवाय्वोर्मध्ये गन्धर्वाप्सरसः ॥ १७ ॥ त्र्यम्बकं त्रिपुरुषं नीलकण्ठं सदाशिवम् । मण्डले स्थापयामीह सुखानुष्ठानसिद्धये ॥ इति ब्रह्मसोमयोर्मध्ये रुद्रम् ॥ १८ ॥ षडाननं चतुर्हस्तं स्कन्दं गौरीसुतं शुभम् । इहैव पूजयिष्यामि सर्वकामार्थसिद्धये ॥ इति रुद्रसोमयोर्मध्ये स्कन्दम् ॥ १९ ॥ शिवद्वारगतस्त्वं च शिववाहनमुत्तमम् । पार्वत्यां प्रीतिकान्तिर्यमिहागच्छ स्थिरो भव ॥ तत्रैव नन्दिनं शूलमहाकालौ च पूजयेत् ॥ २० ॥ अदितिर्देवमाता त्वं दक्षपुत्री सुशोभना । मण्डलेऽस्मिन्समागच्छ

करे । अग्नि और यमके मध्य भाग में दैवे मन्त्र से विश्वेदेव का स्थापन करे । यद० मन्त्र से यम और निर्ऋति के बीच में यक्षों का ३२
स्थापन करे । अनन्तो लिखे हुए मन्त्र को पढ़कर निर्ऋति और वरुण के मध्य में नाग देवताओं का स्थापन करे । उर्वशी मन्त्र से वरुण और वायु के मध्य में गन्धर्व और अप्सराओं की स्थापना करे । त्र्यम्बक मंत्र से ब्रह्म और सोम के मध्य में रुद्र की स्थापना

यावत्पूजा स्थिरा भव ।। तत्रैवादितिम् ।। २१ ।। दक्षोऽसि सर्वकार्येषु महायज्ञकरप्रियः । ऋषिश्च सर्वदा दक्ष मण्डलेऽस्मिन्स्थिरो भव । इति ब्रह्मेशानयोर्मध्ये दक्षम् ।। २२ ।। तामग्निवर्णां तपसा ज्वलन्तीं सर्वदा शुभाम् । भक्तानां वरदां नित्यां दुर्गामावाहयाम्यहम् ।। इति ब्रह्मेन्द्रयोर्मध्ये दुर्गाम् ।। २३ ।। कृष्णाय गोपीनाथाय चक्रिणे मुरवैरिणे । नमस्तुभ्यं जगद्धातर्मण्डलेऽस्मिन्स्थिरो भव ।। तत्रैव कृष्णम् ।। २४ ।। जयन्ती मंगला काली भद्रकाली कपालिनी । दुर्गाक्षमा शिवाधात्री स्वाहा स्वधा नमोऽस्तुते ।। इति ब्रह्माग्न्योर्मध्ये स्वधाम् ।। २५ ।। मृत्युरोगान्तकान्दूतान् प्रेष्यान्प्राणहरान्गणान् । मण्डले स्थापयामीह पूजार्थं लोकनाशकान् ।। इति ब्रह्मयमयोर्मध्ये मृत्युरोगान् ।। २६ ।। कुंकुमाभं सदानन्दं भक्तसङ्कटनाशनम् । चतुर्बाहुं त्रिनेत्रं च मण्डले स्थापयाम्यहम् ।। इति ब्रह्मनिर्ऋत्योर्मध्ये गणेशम् ।। २७ ।। पावनाः सर्वलोकानां

करे । षडानन मन्त्र से रुद्र और सोम के मध्य में स्कन्द की स्थापना करे इसी स्थानपर नन्दी, शूल और महाकाल तथा अदिति देवी की स्थापना करना चाहिये । दक्षोसि मन्त्र से ब्रह्मा और ईशान के बीच में दक्ष प्रजापति की स्थापना करे । ताम् मन्त्र से इन्द्र और ब्रह्मा के मध्य में दुर्गा का स्थापन करे । यहीं पर कृष्ण भगवान् को भी स्थापित करे । ब्रह्मा और अग्नि के मध्य में स्वधा देवी को स्थापित करे । मृत्यु० मन्त्र से ब्रह्मा और यम के मध्य में मृत्यु और रोगों का स्थापन करे । कुंकु० मंत्र से ब्रह्मा और निर्ऋति के मध्य में गणेश की स्थापना करे । ब्रह्मा और वरुण के मध्य में जल का स्थापन करे । ब्रह्मा और वायु के मध्य में मरुत देवता का

निमग्नाः शुद्धिकारकाः सर्वपापहराः श्रेष्ठा मण्डले स्थापयाम्यहम् ॥ इति ब्रह्मवरुणयोर्मध्ये अपः ॥ २८ ॥
सुगन्धिनश्च शैलाद्या मन्दमन्दवहाः सदा । तानहं स्थापयामीह मरुतो मण्डले शुभे ॥ इति ब्रह्मवाय्वोर्मध्ये
मरुतः ॥ २९ ॥ पृथिव्यां धार्यते विश्वं दुर्ग्रहं सागरैर्नरैः । अतस्त्वां स्थापयामीह ब्रह्मणो मण्डले पदे ॥
इति ब्रह्मणः पादमूले पृथिवीम् ॥ ३० ॥ गंगे च यमुने चैव गोदावरि सरस्वति । नर्मदे सिन्धुकावेरी
मण्डले स्थापयाम्यहम् ॥ इति ब्रह्मणः पादमूले नदीः ॥ ३१ ॥ समुद्राः सर्वतोयेषु श्रेष्ठा वै हरिवल्लभाः ।
मण्डले स्थापयामीह तान्नदीशान्सुखाप्तये ॥ इति ब्रह्मणः समन्तात्सप्तसागरान् ( क्षारसागरं क्षीरसागरं
दधिसागरं घृतसागरं इक्षुसागरं सुरासागरं स्वादूदक सागरम् ) ॥ ३२ ॥ तदुपरि मेरुं नाममंत्रेण पूर्वादि-
दिक्षु—इन्द्राणीं स्वाहां प्रथमां नैर्ऋतिं वारुणीं वायवीं कुवेर प्रियां रुद्राणीम् । ततः पूर्वादिदिक्षु—वज्रं शक्तिं

स्थापन करे । पृथ्वि० इन दोनों मंत्रों से ब्रह्मा के पादमूल में पृथ्वी और नदियों का क्रमशः स्थापन करे । समु० मंत्र से ब्रह्मा के चारो ओर सातों समुद्रों का स्थापन करे । इसके बाद नाममंत्र से मेरु के पूर्वादि चारों दिशाओं में क्रमशः इन्द्राणी आदि देवियों का स्थापन करे । मण्डल के मध्य भाग ( ब्रह्मस्थापन ) को मेरु कहते हैं । अतः मेरु के क्रम से ही देवताओं की स्थापना प्रदक्षिणा के रूप में करनी चाहिये । उसके बाद पूर्वादि दिशाओं में वज्रादि अस्त्रों का पूर्वादि क्रम से गजादि वाहनों तत्पश्चात् पूर्वादि आठों दिशाओं में

